जागदीशी पक्षता of जगदीशभट्टाचार्य
– Edited and published by बाबू
वाराणसी प्रसाद at काशी संस्कृत प्रेस.
Loose leaves lithoprint edn.,
Benares, nd.

(24)

1264

॥श्रीगणेशायनमः॥ अथपक्षताशिरोमणिः॥ अनुमितिलक्षणैककार्य्यानुकूलतासङ्गत्या पक्षधर्म्मतां निरूपयितुमाह व्याप्तीति। सन्दिग्धेति। यत्र साध्यस्य यादृशसंबं
धावगाहिनिर्णयनिवर्त्त्योऽयं संशयस्तत्र सतादृशसम्बन्धेन साध्यानुमितौ पक्षीत्यर्थः तेन न पक्षसाध्यविशेष्यकसंशयाननुगमो न वा सम्बन्धान्तरेण सन्देहेऽपि निर्णी
तसम्बन्धेन पक्षत्वम् न वा तमःप्रभृतिषु समवायेनाकाशादिसाधने तद्धेतुकल्पनम्। संशययोग्यतां निरस्यति नापीति साधकबाधकमानेसिद्धिबाधौ केवलान्वयिनि च पक्ष-
निष्ठाभावप्रतियोगित्वधीरेव सुलभोबाधः। ननु तत्रापि पुनरनुमित्सा ततः परामर्शानन्तरं स्मरणात्मकाद्वा परामर्शादनुमितीष्टसाधनताविषयकादनुमित्सा ततोऽनुमिति
रितिफलबलात्कल्पनीयमित्यत आह सिषाधयिषेति नचानुमितिजनिकेच्छैव पक्षता सा च क्वचित्स्वनिष्ठैव सर्वत्रेश्वरनिष्ठैव सुलभेतिवाच्यं तस्या नित्यत्वेन सिद्धावस्या
मपि पक्षताप्रसंगात् नच तस्यास्तदानीं न तज्जनकत्वं तद्भिन्नतद्योग्यता अनपायात् नच तदुपधानम् अनुमितेः पूर्व्वं तदभावात् नच तत्सामग्रीसमवधानं कारणमात्रस्य
पक्षताकुक्षिनिक्षेपप्रसंगाच्छेषवैयर्थ्यात्। तदानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च। सिषाधयिषेति यत्रानुमित्सानन्तरं साध्यतद्व्या
प्यवत्त्वविशिष्टपक्षस्मरणम् अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा अनुमित्सापूर्वकालोत्पन्नविशेषणस्मरणाद्वा अनुमित्साकालोत्पन्नेन्द्रियसन्नि
कर्षसहितात्साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षं तदनन्तरञ्चानुमितिस्तत्र पक्षतासम्पत्तये सहकृतान्तं साधकमानविशेषणं। सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयत्व
प्रकारिका अनुमितिविषयिणीच्छा यत्किंचिज्ज्ञोत्तरंज्ञानंजायतामितीच्छायामपि सिद्धसत्त्वेऽनुमित्यनुत्पादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्व्वतेवह्
न्हिज्ञानंजायतामितीच्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादाच्च यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तदिच्छाभावसमुदायस्य विशेषणत्वादिच्छाया अननुग
मेऽपि न क्षतिः धूमेनानुमिनुयामितीच्छायामालोकपरामर्शात् सत्यामपि सिद्धौ यदि नानुमितिस्तदान्यमात्रलिंगकानुमितीच्छाकामिनी जिज्ञासादिवत् पृथक् प्रतिबन्धि
का यदि च तत्रानुमितिस्तदा सिद्धिसत्त्वे तत्रानुमितेर्वारणाय तल्लिंगिकानुमितीच्छा तदन्यमात्रलिंगिकानुमितीच्छातिरिक्तानुमितीच्छा वा वाच्या लिंगविशेषेणापि च नि
यन्त्रितपक्षत्वं तल्लिंगकानुमितौ सिद्धिकालीनातल्लिंगिकानुमितीच्छाविरहविशिष्टान्यलिंगकानुमितीच्छेव वा प्रतिबन्धिका साधकमानं साध्यवत्त्वनिश्चयः पाषाणमयः
त्वादिना पर्व्वते तेजस्त्वादिना च वन्हेः सिद्धावपि पर्व्वतत्वेन तत्र वन्हित्वेन च तस्यानुमितेर्द्धर्मित्वसाध्यत्वयोरवच्छेदकावनुप्रवेशानीयौ यदि च पर्व्वतत्वसामानाधिकरण्येनैक
त्र साध्यसिद्धावपि विनानुमित्सामन्यत्र नादृशानुमितिरानुभविकी तदा धर्मिविशेषोऽपि निवेश्यो नान्यथा पक्षतावच्छेदकस्य सामानाधिकरण्येन साध्यसिद्धावपि तदवच्छे
देनानुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तु सिद्धिमात्रस्य विरोधित्वम् इत्थञ्च लिंगभेदन्या

योऽनुसरणीयः साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी एवञ्च पक्षविशेष्यकसिद्ध्यनन्तरमपि सा
ध्यविशेष्यिकानुमितिर्जायते तुल्यन्यायात् समानाकारायाः सिद्धेः प्रतिबन्धकत्वे पर्य्यवसानात् तादृशानुमितिं प्रति सिद्धिमात्रं विरोधि साध्यप्रसिद्धिरेव वा अत एव प्रसि
द्धसाध्यकस्थले पक्षविशेष्यिकैवानुमितिरनुभूयत इति अत्र च व्याप्तिस्मरणादिना पूर्व्वानुमित्सानाशे परामर्शकाले च सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैवानुमितिस्तथैवका
रणीभूतस्य विशिष्टाभावस्य संपत्तिरित्युपाध्यायाः। अन्ये तु द्वित्रिक्षणान्तरितायामप्यनुमित्सायामनुमितिदर्शनात् अनुमित्सायोग्यता वाच्या सा च न स्वोत्पत्त्यनन्तरं १
स्वविषयसिद्ध्यनुत्पादः अनुमित्सानन्तरमन्तरानुमित्स्यनुत्पादे दिवसादिविलम्बेनेन्द्रियादिना निर्णीतेऽपि साध्ये लिंगपरामर्शादनुमितिप्रसंगात् किंत्वनुमित्सानन्तरं लिंगद
र्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः फलबलेन तथा कल्पनात् अथवानुमित्सोत्पत्त्यनन्तरमनुमित्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्ये
ऽनुमितिर्जायते तावानेव कालोऽनुमित्सयोपलक्षितः यदि च सिद्ध्यनन्तरं तन्नाशेऽपि द्वित्रिक्षणमध्ये विनानुमित्सामनुमित्यनुत्पादोऽनुभवसिद्धस्तदा सिद्ध्यापि तावानेव समय
उपलक्षणीयः विशिष्यलक्षणनियमस्त्वव हि तैः करणीय इति वदन्ति। अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्व्वोक्तन्यायेन साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा यत्र वा
साध्यतद्व्याप्यधर्मतादृशव्याप्यधर्मान्तरविशिष्टपक्षस्य तत्पक्षकसाध्यतद्व्याप्यवत्त्वानुमित्योरिष्टसाधनतायाश्चैकं स्मरणं ततस्तयोरनुमित्सा ततः साध्यतद्व्याप्यवत्त्वानु
मितिस्तत्र तदनन्तरमनुमितिप्रसंगः योग्यताविवक्षणेन तु सुतरामेवेति तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणं पक्षसाध्यभेदेन च पक्षताया भेदात् पृथक् पृथगेव कार्य्यका
रणभावः तथा च यत्र सिद्ध्यनन्तरं कदाप्यनुमितिर्न जाता तत्र सिद्ध्यभावमात्रं कारणं न तु तत्रेच्छानिवेशोऽपि गौरवात् प्रयोजनाभावाच्च तेन यत्पक्षकयत्साध्यकानुमितौ कस्या
पीच्छा न जाता तत्रोक्तिसाधारण्यमात्रसंपादनायेश्वरेच्छानिवेशनायासो नोपादेयः। यत्तु सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नाया
सिद्धेः सिषाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षता अथ तृतीयक्षणव्यवधायकद्वितीयक्षण एवाव्यवहितत्त्वपर्य्यवसानाद्यत्राविरलक्रमेण सिद्धिसिषाधयिषानु
मितयस्तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयः सिषाधयिषाविरहो विशेषणमस्तु सिद्धेः प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेत् यत्र क्रमेण सिषाधयिषाप्रात्यक्षिक
सिद्धिपरामर्शानुमितयस्तत्र तृतीयक्षणे पक्षतासम्पत्त्यर्थमिति तन्न यत्रानुमित्सानाशकाले प्रात्यक्षिकी सिद्धिरथ च परामर्शानुमिती तत्र पक्षताविरहप्रसंगात् अथ प्र
थमक्षणमपेक्ष्य द्वितीयस्यैव द्वितीयमपेक्ष्य तृतीयस्याप्यव्यवहितोत्तरत्वं स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वं वा तादृशाव्य
वहितोत्तरत्वं वाच्यं तथा च यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणस्य विशेषणं प्रथमं विशिष्टान्तं द्वितीयन्तु सिद्धेस्तत्रैव द्वितीय

प॰ त्रि॰ क्षणे पक्षतासम्पत्तये यदि पुनरिच्छाजनिकासामग्री प्रतिबध्नात्यनुमितिं तदानुमित्यव्यवहितपूर्व्ववर्त्तिसिद्धिभिन्नसिद्ध्यभावमात्रं पक्षतेति चेत्तादृशसिद्धीनां तत्तद्व्यक्तित्वेना
२ भावः कारणं निरुक्तरूपविशिष्टत्वेन वा नाद्यः अनन्तकार्य्यकारणभावप्रसंगात् तादृशसकलसिद्धौ अनुमित्साविरहविशेषणदानस्य वैयर्थ्यात् तत्तत्समये सम्बन्धव्यक्ती
नां तत्तत्समयावच्छिन्नतत्तन्मनोयोगादीनां वा प्रतिबन्धकत्वप्रसंगाच्च नान्त्यः सत्यपि परामर्शादौ कस्याश्चित्सिद्धेरनन्तरमनुमितिः कस्याश्चिन्नेत्यत्र नियामकाभावात् न
वा कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्य्योत्पादादिकं कारणतावच्छेदककोटौ निविशते तथासति उत्पत्तिकालावच्छिन्नत्वविशेषिते न स्वक्षणाव्यवहितोत्तर
क्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्व्वक्षणोत्पन्नसविषयत्वेन स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमाना
धिकरणानुमितिकभिन्नसविषयत्वेन वा किंवा स्वसमानाधिकरणानुमित्यव्यवहितपूर्व्वक्षणवर्त्तित्वविशिष्टज्ञानत्वादिना कारणत्वं स्यात् अव्यवहितोत्तरत्वं द्वितीयत्
वक्षणवृत्ति नातिप्रसंगः न चादिमेषु परामर्शस्थितिक्षणे यत्र विरोधिसिद्ध्यादिविनाशस्तत्रोत्तरक्षणेऽनुमितिर्न स्यात् परामर्शस्य तथात्वादिति वाच्यम् अनुमितिसामग्र्या
विरोधिन्या विरहेण तदानीमुत्पन्नादनुव्यवसायादेरनन्तरः संस्काराद्युतत्संभवात् संस्कारजन्यत्वेन स्मृतित्वस्य प्रागेव निरासात् स्याद्वा स्वसमानाधिकरणानुमित्यव्य
वहितपूर्व्वक्षणवृत्तिभिन्नत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन वा स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यव
हितपूर्व्वक्षणवृत्तित्वविशिष्टत्वेन वा प्रतिबन्धकत्वं तदव्यवहितपूर्व्वत्वञ्च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वं। न चात्र प्रथमे यत्र सिद्ध्यात्मकपरामर्शानन्तरं सिषाध
यिषाया उत्पत्तिकाले तत्पुरुषीयस्य कस्यापि धर्म्मस्य न विनाशः अनन्तरं पुनरनुमितिः तत्र तदुत्पत्तिसमयेऽपि सा स्यात् तत्पूर्व्वकालीनानां सर्व्वेषां तादृशपूर्ववर्त्तित्वेनाविरो
धित्वादिति वाच्यम् अनवरतपरिस्पन्दमानापरिमितपवनादिपरमाणुचेतनसंयोगसन्तानान्तःपातिव्यक्तीनामविरतमेवोपरमात् फलानुत्पादवलेनापि तादृशकल्पनास
म्भवात् कारणान्तरकल्पने गौरवाच्च अन्वयव्यभिचारसन्देहस्य च कारणत्वग्रहविरोधित्वात् उपादीयन्तां वा तत्तदात्मसमयविशेषसम्बन्धा एव तादृशपूर्ववर्त्तिभिन्नाः
भवेद्वा तत्तत्पुरुषीयानुमितिं प्रति तत्तदीयानुमित्यव्यवहितपूर्वक्षणत्वादिना तादृशक्षणवर्त्तित्वविशिष्टत्वादिना वा कारणत्वं तथा चोपमानादेः प्रमाणान्तरत्वं भज्येत सर्वत्रानुमि
तिसामग्रीसंभवात् विलीयेत च परामर्शत्वादिना कारणत्वं बाधकत्वादिना च प्रतिबन्धकत्वं अनयैव रीत्या कार्य्यान्तरेष्वपि क्लृप्तानां कारणानां प्रतिबंधकानाञ्च तथात्वमक्लृप्ता
नाञ्च तथात्वं प्रसज्येत अतएव न द्वितीयोऽपि प्रकारः वैयर्थ्याच्च सिद्धेः। सिषाधयिषाविरहविशिष्टस्य सिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभावः कारणमिति तु के राम॰
चित्तन्न साधकमानं हि सिद्धिस्वरूपयोग्यं तदुपहितं तत्सामग्री वा नाद्यः चक्षुरादिसत्त्वे विनानुमितीच्छामनुमित्यभावप्रसंगात् न द्वितीयः सिद्धेः पूर्वं तदुपहितत्वाभावेन २

प्रत्यक्षसामग्रीसत्वेप्यनुमित्यापत्तेः अनुमानातिरिक्तेत्यस्यवैयर्थ्याच्च न तृतीयः अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वम् अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभावत्वेन
चानुमितिकारणत्वमित्यन्योन्याश्रयात् स्थाणुत्वाभावव्याप्यदर्शनक्षणे प्रति योग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात् पक्षतासत्वे स्थाणुत्वारोपक्षणे तदभावानुमि
त्यापत्तेरित्यपि कश्चित् वस्तुतस्तु स्वतन्त्रान्वयव्यतिरेकशालित्वान्नियमेन प्रथममुपस्थितत्वाल्लाघवाच्च प्रत्येकमेव तथात्वमन्यथा बाधादेरप्यत्रैवान्तर्भावप्रसंगात् न
चानुमित्साविरहस्य प्रत्येकं विशेषणत्वे गौरवं शाब्दसिद्धौ सत्यामशब्दं ज्ञानं जायतामितीच्छायामनुमितेरुत्पादात् सिद्धावनुमितिविषयेच्छाविरहस्य प्रत्यक्षसामग्रीसत्वे
च तादृशेच्छायामनुमित्यनुत्पादात् साधकमाने अनुमितित्वादिप्रकारकेच्छाविरहस्य पृथगेव विशेषणतायास्त्वयापि वाच्यत्वात् स्वनिवर्त्तकप्रत्यक्षादिसामग्रीसमवहि
तान्यत्वादिना च तादृशेच्छयोरनुगमेः तीव्रगौरवम् अन्यतरत्वघटकयोरन्योन्याभावयोर्मिथो विशेषणविशेष्यभावे विनिगमकाभावश्च आत्मनिष्ठत्वसमवायेन सिद्धेर
भावः भिन्नभिन्नेन च सम्बन्धेन तत्तदसाधारणकारणरूपायास्तत्सामग्र्याः मणिविशिष्टस्य वन्हेरिवेतरेतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात् तथाच कथम
नुगतरूपेण तयोरभावः कारणं एवं सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्यमेककालावच्छेदेनैकात्मवृत्तित्वं प्रत्यक्षादिकारणचक्षुःसंयोगादेस्त्वन्यादृशमिति सामग्रीवि
शेषाभावस्य हेतुत्वेपि लाघवात् सिद्ध्यभाव एव पक्षव्यवहारनिमित्तं एतदेवाभिसन्धाय प्रवृत्तिनिमित्तमुक्तमिति वक्ष्यति फलानुपहितसिद्धीच्छाविरहविशिष्टसि-
द्ध्यभावापेक्षया बाधाभावस्य लघुत्वेपि सिद्धसाधनस्थलपक्षव्यवहारविरहेण तादृशसिद्ध्यभावस्यावश्यकत्वे बाधाभावो न निविशते गौरवात् विशिष्टसिद्ध्यभा-
वस्य चात्मनिष्ठस्यैवानुमितिहेतुत्वेपि तस्य परम्परासम्बन्धादेव पर्व्वतादौ पक्षव्यवहार इति ध्येयम् एकस्य पुंसोऽनुमित्सासत्वेपि अन्यस्य तद्विरहिणः प्रत्यक्षादिसाम
ग्रीसत्वेऽनुमित्यनुत्पादात् तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषीयानुमित्साविरहकालीनतत्तत्पुरुषीयसिद्धिसामग्रीविशेषविरहोऽनन्यगतिकत्वेन हेतुरुपेतव्य इति वद-
न्ति। अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्तु न चैवं मण्यादिस्थलीयदाहं प्रत्युत्तेजकस्य हेतुत्वापत्तिः उत्तेजकानामननुगतत्वात् तावदभावविशिष्टमण्याद्यभाव-
स्य चानुगतत्वादिति चेदिहापि दर्शितोऽननुगमः सिषाधयिषायाः सिद्ध्युत्तरानुमितित्वञ्चानुगतानतिप्रसक्तं दुर्व्वचं सिद्धिस्थितिकालीनां स्वेतरसिद्धिकालीनां वानुमितिं
प्रति हेतुत्वकल्पने च विनापि सिषाधयिषां सिद्धिनाशकालेऽनुमित्युत्पादो दुर्व्वारः एकस्य च पुंसः सिद्धिसत्वेऽन्यस्य सिषाधयिषाशून्यस्यानुमित्यनुत्पादप्रसंगः तत्तत्पुरु-
षीयतादृशानुमितिं प्रति सिषाधयिषाया हेतुत्वेऽनन्तकार्य्यकारणभावप्रसंगः अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गा-
त् न हीदृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति न चान्यत्रापि तद्विशेषसामग्र्यन्तरमस्तीति तत्कल्पने चातिगौरवं इह जायमाना सा सिद्ध्युत्तरेवस्या

ग॰प॰ त्सान्न जायते कारणाभावादिति चेत् समाजनिष्ठानुमितिसामान्यन्तु स्यादेव कार्य्योत्पादविरहस्य विना कारणभावमसंभवात् करणव्यापारत्वेनावश्यककारणभाव
३ स्य परामर्शस्य कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः प्रतिबन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात् अन्यथा यथासंभवं निमित्तकारणस्य
समवायिकारणत्वाद्यवच्छेदकत्वप्रसंगात् अथानुमितिसाधारणसिद्धेः प्रतिबंधकत्वे तदभावस्य मण्याद्यभाववत् प्रतिबन्धकाभावत्वेन कार्य्यकालवृत्तेरेव हेतुत्वात्
अनुमितिकाले च तदसंभवात् सा नोत्पद्येतेति चेन्न यस्य मण्याद्यभावादेः कार्य्यसमकालतयान्वयव्यतिरेकित्वं तस्यैव तथात्वेन हेतुत्वं न तु सर्व्वस्य गौरवात् अन्य
था समवायिकारणस्य कार्य्यसहभूतस्यैव हेतुत्वात् कारणमात्रस्य तथात्वप्रसक्तौ प्राभाकरा एव विजयेरन्निति। प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शानुमि
तिप्रवाहस्याविरललग्नस्यानुभविकत्वात् कालभेदकल्पनायाञ्च मानाभावात् मानाभावाच्च पक्षता नानुमितिहेतुः परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषण
मित्याहुः ॥ ॥ अथ जागदीशी पक्षता ॥ अनुमितिलक्षणेति। अनुमितिस्वरूपे इत्यर्थः। व्याप्तिज्ञानजन्याया अनुमितेः किमन्यत्कारणमिति जिज्ञासायैव पक्षतानिरूप
णादिति भावः अत्रानुकूलत्वं जनकजनकतावच्छेदकसाधारणप्रयोजकत्वमात्रं तेन व्याप्तेरनुमित्यहेतुत्वेपि न क्षतिः यत्तु जनकतावच्छेदकत्वमेवात्रानुकूलत्वं व्याप्ति
वत्पक्षताया अपि करणव्यापारतया सिद्धहेतुभावस्य परामर्शस्य जनकतायामवच्छेदकत्वादिति मतं तत्तुच्छं पक्षता न कारणमिति तु भ्रम इत्याद्युत्तरग्रन्थविरोधापत्तेः पक्ष
धर्मतामिति। पक्षे धर्मत्वं यस्या इति व्युत्पत्त्या पक्षतामित्यर्थः पक्षस्य धर्मत्वं धर्मविशेषः पक्षत्वमिति वा देवतादिशब्दवत्तलः स्वार्थिकत्वात् व्याप्तौतीति। न च प्रकृतग्रन्थस्वर
संवलितस्यैव पाठस्य धर्त्तुमुचितत्वाद्व्याप्त्येव धारणं युक्तमिति वाच्यमप्रयोजकत्वात् व्याप्तिनिरूपणानन्तरमित्येवं मूलपाठमनुसृत्यैव तथोपन्यासादिति भावः। ननु
संदिग्धसाध्यधर्मत्वमिति मूलस्य यदि संदेहविषयीभूतसाध्यवत्त्वमर्थस्तदा विनष्टवन्ह्यादेर्जलादावनुमितिर्न स्यात्तत्र तादृशसाध्याभावेन पक्षताविरहादतः साध्य
संशयस्यैव पक्षतात्वमाह पर्वतेत्यादिना यद्धर्मिकयत्संबंधावच्छिन्नयत्प्रकारकनिश्चयत्वेन यत्संशयं प्रति निवर्त्तकत्वं स संदेहस्तत्पक्षकतद्विधेयकानुमितौ हेतुभूता प
क्षतेत्यर्थः तेन वन्हिधर्मिकघटादिनिर्णयात्मकस्य पर्वतधर्मिकवन्हिमत्त्वनिश्चयस्य निवर्तनीयोपि वन्हौ घटादिसंदेहो न पर्वतपक्षकवन्ह्यनुमितौ पक्षता तत्र वन्हिमत्त्व
निश्चयत्वेनाप्रतिबन्धकत्वादिति भावः अत्र निश्चयत्वावच्छिन्नत्वञ्च निश्चयत्वव्यापकत्वेन तु स्वरूपसम्बन्धरूपं तेन प्रमेयवन्हिसाध्यके प्रमेयवन्हिमानवन्ह्यभाववा
नवा इत्यादिसंग्रहः। अत्र पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्तनीयत्वमात्रं बाधनिश्चयेऽतिव्याप्तमतः संशयपदं न च बाधनिश्चयस्य पक्षतात्वे न क्षतिः विशिष्टबुद्धिसा राम
मान्ये प्रत्येव बाधनिश्चयस्य विरोधित्वादेव तत्रानुमित्यसंभवादिति वाच्यं संदिग्धाप्रामाण्यकबाधनिश्चयसत्त्वे सिद्ध्यात्मकादपि परामर्शादनुमित्यापत्तेः तादृशबा ३

धनिश्चयस्यविशिष्टबुद्ध्यप्रतिबंधकत्वात् यद्यपिनिर्वन्हिःपर्वतोरूपवान्नवेत्यादिसंदेहात्मकस्यबाधनिश्चयस्यपर्वतधर्मिकवन्हिमत्तानिश्चयनिवर्त्यत्वंसंशयत्वंचा
स्तीतिवन्हिसाध्यकपक्षतालक्षणस्यनत्रातिव्याप्तिः पक्षेसाध्यसंशयत्वोक्तौचनानुगमवार्त्तापि तथापिसंशयत्वमत्रतादृशनिश्चयाप्रतिबंधकत्वं तथाचपक्षधर्मि
कसाध्यवत्तानिश्चयनिवर्त्यत्वेसतितादृशनिश्चयप्रतिबंधकतावच्छेदकविषयिताशून्यज्ञानत्वंफलितार्थः तेनगृहीताप्रामाण्यकबाधनिश्चयस्यपक्षधर्मिकसाध्य
वत्वज्ञाननिवर्तकत्वाभावेपितन्निवर्तकतावच्छेदकविषयिताकत्वादेवव्युदासः यद्यपिचैवमपिवन्हिव्याप्यसाध्यकानुमितौवन्हिमान्नवेतिसंशयः पक्षतास्यात् । त
स्यापिपक्षधर्मिकवन्हिव्याप्यवत्वरूपसाध्यनिर्णयनिवर्त्यत्वात्तादृशनिश्चयाप्रतिबन्धकत्वाच्चनचेष्टापत्तिः पर्वतोवन्हिमान्नवेतिसंशयोत्तरंपर्वतोवन्हिव्याप्यवानि
त्येवंसाध्यनिर्णयेपिवन्हिव्याप्यसाध्यकानुमित्यापत्तेः तथापिप्रकृतपक्षविषयितावन्हिभूतसाध्यविषयिताघटितधर्मावच्छिन्नंयत्प्रकृतपक्षधर्मिकप्रकृतसाध्यव
त्तानिश्चयनिवर्त्यत्वंतन्निवेशितमित्यदोषः पर्वतोवन्हिमान्नवेतिसंशयस्यचवन्हिव्याप्यवत्तानिश्चयनिवर्त्यत्वेपितादृशनिवर्त्यतायाः पर्वतधर्मिकवन्ह्यभावप्रका
रत्वेनैवावच्छेद्यतयावन्हिव्याप्यवत्वरूपसाध्यवत्वविषयितानवच्छेद्यत्वात् नचतथापिवन्हिभूतांतदंशव्यर्थमितिवाच्यं वन्हिव्याप्यवत्सधर्मोपर्वतोवन्हिमान्न
वेतिसंशयस्यतादृशपर्वतत्वावच्छिन्नपक्षकवन्हिव्याप्यसाध्यकानुमितौपक्षतात्वव्युदासकत्वात् वस्तुतस्तुपक्षविषयितावन्हिभूतेत्याद्यपहायसाध्याभावत्वा
त्व वच्छिन्नप्रकारि त्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नमेवसाध्यनिश्चयनिवर्त्यत्वंवाच्यं तेनवन्हौपक्षेवन्हेःसाध्यतायांवन्हिर्वन्हिमान्नवेतिसंशयस्यपक्षविष
यितावन्हिभावेनसाध्यविषयित्वाप्रसिद्धावपिनतत्राव्याप्तिः नचैवंह्रदादौवन्ह्यभावस्यानुमानेह्रदोवन्हिमान्नवेतिसंशयः पक्षतानस्यात् तन्निष्ठायास्साध्य
वत्तानिश्चयप्रतिबध्यतायावन्हिमताविषयकत्वेनैवावच्छेद्यतयासाध्याभावत्वावच्छिन्नप्रकारित्वानवच्छेद्यत्वमितिवाच्यमिष्टत्वात् ह्रदोवन्ह्यभाववान्नवेत्या
कारकसंशयस्यैवपक्षतात्वात् साध्यपक्षभेदेनपक्षतायानानात्वाद्व्याप्यवत्तासाध्यपक्षतालक्षणएवसाध्यविषयित्वघटितधर्मावच्छिन्नप्रतिबध्यतायाः प्रवे
श्यत्वादितिवदंति वन्हिव्याप्येवन्हिव्याप्यस्यसाध्यतायांवन्हिव्याप्योवन्हिव्याप्यवान्नवेतिसंशयस्यपक्षतात्वाहान्यापत्तेः तादृशनिष्ठायास्तादृशपक्षधर्मिक
तादृशसाध्यवत्तानिश्चयनिवर्त्यतायाःपक्षीभूतसाध्यविशेष्यकत्वावच्छेद्यत्वादितिध्येयम् केचित्तुसंशयत्वमत्रप्रकृतपक्षविषयितानिरूपितप्रकृतसाध्य
निष्ठविषयिताकत्वम् अतोवन्हिव्याप्यसाध्यकानुमितौवन्हिमत्वसंशयस्यनिर्वन्हित्वसाध्यकानुमितौमहानसीयवन्हिमत्वसंशयस्यनपक्षतात्वं तस्यतादृशसाध्य
पक्षोभयवैशिष्ट्यावगाहित्वाभावात् एवंचपक्षधर्मिकसाध्यवत्तानिश्चयस्यापितादृशत्वात्तद्वारणायनिवर्त्यान्तमित्याहुः तन्नसाध्यंपक्षवृत्तिनवासाध्यंपक्षनिष्ठाभा

जा·प· वप्रतियोगिनवेत्यादिसंदेहस्यापिलक्ष्यतयातत्राव्याप्तत्वात् तेषांपक्षसाध्योभयवैशिष्ट्यानवगाहित्वात् पर्वतोवन्हिव्याप्यवानित्येवंसाध्यनिश्चयनिवर्तनीयस्यपर्वतो॰
४ निर्वन्हिर्वन्हिव्याप्यरूपपर्वतवान्नवेतिसमूहालंबनस्यवन्हिव्याप्यसाध्यकानुमितौपक्षतात्वप्रसंगाच्च तस्यापिवन्हिव्याप्यात्मकसाध्यपक्षोभयवैशिष्ट्यावगाहित्वा
त् आधेयत्वसंबंधावच्छिन्नसाध्यविषयितायाः प्रवेशेतुपक्षस्साध्यवान्नवेत्यादिसंशयस्यासंग्रहापत्तेरितिदिक् यत्तुसाध्यवत्तानिश्चयनिवर्त्यसंशयत्वमित्यत्र सं॰
शयत्वंसाध्याभावनिश्चयनिवर्त्यत्वरूपंसर्वत्रग्राह्यमतोनोक्तदोषाणामवकाशइतितन्तुच्छं पर्वतत्वावच्छेदेनवन्हेःसाध्यवत्तास्थलेवन्ह्यभाववत्पर्वतसधर्मा व॰
न्हिमत्पर्वतोऽन्यंनवेतिसंशयस्यपक्षतात्वापत्तेः तादृशसंशयस्यपर्वतत्वावच्छेदेनवन्हिनिश्चयस्यतदवच्छेदेनवन्ह्यभावनिश्चयस्यापिप्रतिबध्यत्वादितिदिक् इ
दन्तुचिन्त्यते अन्यत्रास्तु यथातथापिवन्हिव्याप्यवतिवन्हेस्साध्यतास्थलेतद्धर्मिकतादृशनिश्चयप्रतिबध्यस्यसंशयस्याप्रसिद्ध्याकुत्रलक्षणेनेयंवन्हिव्याप्यवा
न्वन्हिमान्नवेत्यादिसंशयस्याहार्यत्वेनाप्रतिबध्यत्वादिति ननुपक्षधर्मिकसाध्यसंशयत्वंसाध्यधर्मिकपक्षवृत्तित्वसंशयत्वादिकंवालघुलक्षणंकुतः परित्यक्तमत
आह तेनेति यादृशसंबंधावगाहित्वस्यफलमाह नवेति मूलस्थस्यसाध्यधर्मवत्त्वमित्यस्यपरित्यागेवीजमाह नवातमइत्यादिसंदिग्धसाध्यधर्मवत्त्वमितिमूलस्यसं
दिग्धसाध्यधर्मत्वंयस्येतिव्युत्पत्त्यायद्वृत्तित्वंसाध्येसंदिग्धमितियावत् किंवासंदिग्धःसाध्यधर्मोयत्रेतिव्युत्पत्त्यायथाश्रुतोऽर्थः तत्रप्रथमेपक्षीभूततमःसमवेतस्यद्वि
तीयेत्वधर्मात्मकगगनसाध्यस्याप्रसिद्ध्याद्व्यमपिलक्षणंदुष्टमित्याशयेनतमसःपक्षतयागगनस्यसाध्यतयोल्लेखः अत्रचमतेपक्षसाध्यवत्तासंशयोत्तरंसिद्ध्यात्मक
परामर्शादप्यनुमितिभवत्येवेतिबोध्यम् नचोक्तलक्षणस्यसाध्यसंशयमात्रपरत्वेऽग्रिममूलेतस्यविशेषणत्वादिविकल्पस्यासंगतिः तत्रविशेषणोपलक्षणपदयोः
साक्षात्परंपराकारणपरत्वात् संदिग्धंसाध्यंयत्रतद्धर्मत्वंतत्संबन्धित्वमितिव्युत्पत्त्यालब्धस्यविशेष्यकसाध्यसंशयसंबंधित्वरूपंयथाश्रुतार्थमादायैवविशेषणत्वो
पलक्षणत्वयोरग्रेविकल्पइत्यप्याहुः तद्वैकल्पम् पक्षतावैकल्पम् ननुयोग्यतायाश्चानिरूपणादितिग्रंथेनाऽग्रेऽनुमित्तायाइवसंशयस्यापियोग्यतायानिरसयितुमु
चितत्वात् तदनिरसनामूलस्यन्यूनत्वमतआह संशयेति सिद्धिबाधयोर्जनकस्यव्याप्तिज्ञानमनोयोगादेस्सर्वत्रैवानुमितेः पूर्वंसत्त्वाद्व्याचष्टे साधकेत्यादि तथाचसाध
केनबाधकेनजनितंयन्मानमितिमूलेऽन्वयः ननुपक्षधर्मिकसाध्याभावनिश्चयात्मनोबाधस्यकेवलान्वयिन्यप्रसिद्धिरतआह।केवलान्वयिनिचेतिपर्वतोनवाच्यत्व
वानित्याकारकःपटाद्यभावप्रतियोगितासंबंधेनवाच्यत्वाद्यवगाह्यपिबाधःखंडशःप्रसिद्ध्यातत्रसंभवतीत्यावेदयितुंसुलभइत्युक्तं नचैवंनानाविधानांबाधबुद्धीना राम·
मनुगमासंभवःप्रातिस्विकरूपेणतेषांनिवेशेतुनाप्यभावद्वयमितिमूलासंगतिर्बाधाभावस्यानेकत्वादितिवाच्यं पक्षधर्मिकसाध्यवत्ताज्ञानविरोधिनिर्णयत्वेनतासाम ४

नुगमादितिभावः मूलेप्रत्यक्षपरिकलितमिति प्रत्यक्षपरिकलिततत्त्वविशिष्टविषयकोनुमानजन्योबोधस्तदिच्छावंतइत्यर्थः तेनोपजातप्रत्यक्षविषयत्वदशायामे
वानुमितिविषयत्वलाभान्नवचनयोर्विरोधस्यासंगतिरितिध्येयं तत्रापीति अनुमित्सानाशस्थलेपि पुनरिति उत्पन्नपरामर्शानन्तरमित्यर्थः ननुपुनरनुमित्सार्थमनु
मितीष्टसाधनताज्ञानस्यपूर्वमपेक्षणात्तेनैवप्राक्तनपरामर्शनाशात्कुतस्तत्रानुमितिस्स्यादत आह ततःपरामर्शान्तरमिति ततोनुमितिरित्यग्रेन्वयः इष्टसाधनता
ज्ञानपरामर्शयोः पृथक्कल्पने गौरवादाह स्मरणात्मकेति विशिष्टानुभवंप्रत्येवविशेषणज्ञानस्यसाक्षाद्धेतुतयातादृशविशिष्टपरामर्शार्थंविशेषणज्ञानकल्पनेगौरव
मपिनास्तीत्यावेदयितुंस्मरणात्मकाहेत्युक्तं नचोक्तपरामर्शानंतरमनुमित्सादशायामनुमितिप्रसंगः सामग्रीसत्वादितिवाच्यं सिषाधयिषारूपायाःपक्षतायाःप्रा
गसत्वादिच्छासामग्र्याएवप्रतिबंधकत्वाच्चेतिभावः कल्पनीयमिति नचैतावतापिप्रत्यक्षाद्भिन्नंवन्हिज्ञानंजायतांवन्ह्यनुमितिर्जायतामित्यादिरूपाणामनुमि
त्साव्यक्तीनामननुगतरूपविरहात्कारणत्वासंभवइतिवाच्यं यद्यनुमित्सासत्वएवयत्पक्षकयत्साध्यकानुमितिस्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वेनैव
तत्पक्षकतत्साध्यकानुमितावनुमित्सायाहेतुत्वसंभवादितिभावः यत्तुयत्पक्षकयत्साध्यकानुमितिनिवर्त्यानुमित्सात्वेनैवतत्पक्षकतत्साध्यकानुमितौहेतुत्व
मिति तन्नतादृशानुमितित्वावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यत्वस्योक्तावशाब्दज्ञानंजायतामित्याकारानुमित्साया असंग्रहापत्तेः तस्यामशाब्दज्ञान
त्वेनप्रतिबंधकत्वात्प्रकृतपक्षसाध्यकानुमितिनिष्ठप्रतिबंधकतामात्रस्योक्तौचसमूहालंबनतादृशानुमितिप्रतिबध्यतामादायघटाद्यनुमित्सायामतिव्याप्त्या
पत्तेरितिध्येयं मिश्रमतमाशंक्यनिषेधयति नचेति वाच्यमित्यन्वयः अनुमितिजनकेति तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितौतादृशानुमितिजनकेच्छैवपक्षते
त्यर्थः विषयितयाधात्वर्थान्वयिनएवसनः समानकर्तृत्वस्यतंत्रत्वादितिभावः सुलभेति तथाचघनगर्जितादनुमितौनव्यभिचारइतिभावः तस्याईश्वरेच्छायाः त
दानींसिद्धिदशायांनतज्जनकत्वं नतादृशानुमितिजनकत्वतद्धितादृशानुमितिजनकत्वं त्वनपायात् स्वरूपतःसत्वात् नचतत्पुरुषीयतादृशानुमितिंप्रतित
त्पुरुषीयतादृशानुमित्यव्यवहितप्राक्क्षण वृत्तित्वविशिष्टेच्छात्वेनहेतुत्वात्तदानींस्वरूपयोग्यत्वमेवनास्तीतिवाच्यं कार्याव्यवहितपूर्ववर्त्तित्वादिनाहेतुत्वस्या
ग्रेसार्वभौमनिरुक्तौनिरस्यत्वादितिभावः तदुपधानंतादृशानुमितिविशिष्टत्वंतदभावादिति तथाचासत्यामपिसिद्धावनुमितिर्नस्यात्प्रकृतैतत्कानुमित्यनंतरमेवानुमि
त्यंतरंस्यादितिभावः तत्सामग्रीति तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितिसामग्रीविशिष्टत्वमेवतादृशानुमितिजनकत्वमित्यर्थः प्रसंगादिति तथाचपरामर्शादिकंहेतु
र्नस्यात् अवच्छेदकत्वादितिभावः इष्टापत्तौबाधकमाह प्रोषेति तादृशानुमितिसामग्रीविशिष्टत्वेनैवहेतुत्वसंभवादिच्छाभागस्यवैयर्थ्यादित्यर्थः नचात्रसामग्री

पदेनेच्छेतत्कारणस्तोमस्य वधर्त्तव्यस्तथाचसिद्धिकालीनपरामर्शस्यापितादृशस्तोमविशिष्टत्वादितिततोऽनुमितिर्वारणार्थमेवेच्छाभागः प्रवेशनीयः इतिवाच्यंसिद्धि
दृशायामिच्छान्यस्यानुमितिकारणस्तोमस्यासत्वात् अन्यथातादृशस्तोमविशिष्टायाभगवदिच्छायास्तदानीमपिसत्वादिच्छानिवेशेपितत्रानुमितेर्दुर्वारतापत्तेःघनग
र्जितादनुरोधेनतादृशेच्छायाः सामानाधिकरण्यप्रत्यासत्याहेतुत्वासंभवादितिभावः नन्वीच्छाभागोनदेयतादृशानुमितिसामग्रीविशिष्टत्वेनैवहेतुत्ववाच्यंतथैवानु
मित्सायाः सर्वत्रहेतुत्वसंभवादित्यतआह तदानीमितिसिद्धिदशायांयत्कारणाभावप्रयुक्तःसामग्रीविरहः तत्कारणस्येत्यर्थः। वक्तव्यतापातादितितथाचावश्यकत्वा
त्तसैवपक्षतेतिभावः ननुक्रमोत्पन्नानांसिद्धीच्छापरामर्शानांयुगपदसत्वात्सहकृतांतदलंव्यर्थमतआह यत्रेति पक्षस्मरणमिति तदनन्तरंचानुमितिरित्यग्रेऽन्वयः
विशिष्टानुभवंप्रत्येवविशेषणज्ञानस्यहेतुत्वात्तदपेक्ष्यगौरवंनास्तीत्याशयेनस्मरणपर्यंतानुधावनं अत्रानुमित्सार्थमनुमितीष्टसाधनताज्ञानानन्तरंकल्प्यमतो
लाघवात्साह अनुमितीत्यादि तादृशस्मरणादिति साध्यतद्व्याप्यविशिष्टपक्षस्मरणादित्यर्थः। अनुमित्सेति तदनंतरंचानुमितिरित्यग्रेणान्वयःस्मृत्यात्मकसिद्धौ
सहकृतांतविशेषणस्यप्रयोजनमुक्त्वाऽनुभवात्मकसिद्धौतदाह पूर्वकालेत्यादिना ज्ञानेच्छयोरयोगपद्यादनुमित्साजन्मक्षणेविशेषणस्मरणस्यासंभवादुत्तरक्षणे
तत्स्मरणेतुपरामर्शदशायामनुमित्सानाशात्तत्रपक्षतैवनोपेयतइत्यतउक्तं पूर्वकालेत्यन्वेति अनुमित्सापूर्वकालोत्पन्नेत्यर्थः अनुमित्सायाः पूर्वंपक्षसन्निकर्षेऽनु
मित्सामवधूयवन्ह्यादिसाध्यकतद्व्याप्यवत्वेनपर्वतादेःप्रत्यक्षमेवस्याद्दूहिरर्थलौकिकप्रत्यक्षसामग्र्याःसर्वतोवलवत्वादनुमित्सानंतरंसन्निकर्षेऽपरामर्शदशायां
नानुमित्सायाःसत्वमतउक्तमनुमित्साकालेति इदमुपलक्षणं यत्रानुमितीष्टसाधनताविषयकस्यसाध्यतद्व्याप्यविशिष्टस्यप्रत्यक्षानंतरमनुमित्सातत्रापिपक्षतासं
पत्त्यर्थंसहकृतांतंबोध्यं पक्षतासंपत्तयइति नवानुमित्सादशायामपिघटाद्यवच्छेदेनतदभावस्यात्मनिसत्वात्पक्षताभंगप्रसंगःदेशानवच्छिन्नविशेषणतयैवसामा
नाधिकरण्यरूपस्यानुमित्साविरहवैशिष्ट्यस्योक्तत्वादिति ननुसिद्धिगोचरेच्छामात्रस्यसिषाधयिषात्वेद्रव्यत्वेनद्रव्यज्ञानंजायतामितीच्छायामपिसिद्ध्यात्मकपराम
र्शाद्दूत्यनुमितिः स्यादतआह सिषाधयिषेति तत्साध्येति प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविषयताकत्वप्रकारिकेत्यर्थः तेनवन्हिविशिष्टह्रदाद्यप्रसिद्धावपि
पि ह्रदोवन्हिमानित्याद्यनुमितौनपक्षताहानिः नवापाषाणमयत्वेनपर्वतेतेजस्त्वेनवन्ह्यनुमितिर्जायतामितीच्छायामपिसिद्धिदशायांपर्वतोवन्हिमानित्यनुमिति
स्तदिच्छायाःपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नाधेयताद्यनवगाहित्वादितिभावः वन्हिमत्वेनपर्वतस्यप्रत्यक्षंजायतामितीच्छावारणार्थमाह अ
नुमितिविषयिणीति यत्किंचिदिति द्रव्यत्वेनद्रव्यगोचरज्ञानंजायतामितीच्छायामपिवन्हेः सिद्ध्यात्मकपरामर्शादनुमित्यनुत्पादादित्यर्थः तेनज्ञानंजायतामितीच्छोत्तरं

सिद्ध्युत्पादेवक्ष्यमाणस्वविषयसिद्ध्यनुपहितत्वविशेषणादेव तदिच्छावारणं सिद्ध्युत्तरंचतादृशेच्छानभवत्येव ज्ञानमात्रस्यैव ज्ञानत्वप्रकारिकेच्छाविरोधित्वादितिप्रयु
क्तं । नन्वनुमितिविषयत्वेनानुमित्साव्यक्तीनां प्रवेशे गौरवादनुमितित्वप्रकारिकेच्छैव प्रवेश्यतामत आह अनुमितित्वेति सिद्ध्यात्मकपरामर्शोत्तरं पर्वते वन्हिज्ञानंजा
यतामितीच्छैव नोत्पद्यते सिद्धिविरोधित्वात् सिद्ध्यात्मकपरामर्शपूर्वकालोत्पन्नायास्तादृशेच्छाया नानुमितावुपयोगः स्वविषयसिद्ध्यनुपहितत्वाभावादतः प्रत्यक्षाद्य
तिरिक्तमित्युक्तं अनुमित्सुत्पादाद्येति तथा च व्यभिचाराल्लाघवमकिंचित्करमिति भावः ननु यत्र वन्हिमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छैव प्रत्यक्षत्वेनानुमिति
मवगाह्य वृत्ता तत्रापि सिद्धौ सत्यामनुमित्यापत्तिः किंच प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविषयताकत्वप्रकारकेच्छाया एवोत्तेजकत्वे वन्हिभिन्नान्यविधेय-
कानुमितिर्जायतां प्रत्यक्षादिभिन्नं वन्हिविधेयकं ज्ञानं जायतामितीच्छायामपि सिद्ध्यात्मकपरामर्शादनुमितिर्न स्यात् तथा च तादृशतादृशेच्छानामप्युत्तेजकत्वं वा
च्यमित्यननुगम इत्यत आह यादृशेति । सिद्ध्यसमानकालीनानामनुमितिप्राक्क्षणावस्थायिसिषाधयिषाणामुत्तेजकेविधया पक्षतायां प्रवेशो व्यर्थः कारणतावच्छे
दकगौरवापादकश्च स्यादतः सिद्धौ सत्यामित्युक्तम् अत्रैककारानुमित्साव्यक्तीनामननुगतरूपेणोत्तेजकत्वलाभार्थं यादृशयादृशेत्युक्तमिति प्राञ्चः वस्तुतो यद्यदि
च्छाव्यक्तिसत्त्व इत्येव वक्तव्यं अन्यथा यत्र सिद्ध्यात्मको वन्हिमात्रपरामर्शस्तत्रानुमितिर्जायतामितीच्छायामपि वन्ह्यनुमित्युत्पादादनुमितित्वप्रकारकेच्छात्वे
नाप्युत्तेजकता यत्र सिद्ध्यात्मको वन्हिपरामर्श एव सिद्ध्यनात्मकद्रव्यत्वादिसाध्यकः परामर्शस्तत्रानुमितिर्जायतामिच्छादशायां वन्ह्यनुमित्यापत्तेः एवं पर्वतमा-
त्रपक्षकात्सिद्ध्यात्मकपरामर्शाद्वन्ह्यनुमितीच्छाया पर्वते वन्ह्यनुमितिस्तत्र वन्ह्यनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे यत्र पर्वते महानसे च वन्हिव्याप्यवत्त्वपरा
मर्श एव पर्वते सिध्यात्मकः तत्रापि वन्ह्यनुमितिर्जायतामित्याकारकेच्छायां पर्वते वन्ह्यनुमित्यापत्तेः न चेष्टापत्तिरनुभवविरोधात् प्रकारांतरेण विषयपर्य्यवसान
संभवेनानुमित्सानामवगतार्थगोचरज्ञानानजेकत्वादस्माकं तु समूहालंबनस्थलीयतत्तद्व्यक्तीनामुत्तेजककोटावप्रविष्टत्वान्न दोष इति परं तु तत्पक्षकतल्लिंगकानु
मितित्वावच्छिन्नं प्रत्येव पक्षतायाः कारणत्वमिति कल्प्य तल्लिंगकतत्पक्षकतत्साध्यकानुमितिप्रकारिकेच्छात्वाद्यवच्छिन्नाभावोऽनुगतरूपेणैव पक्षतायां लाघवा-
न्निवेशनीयो न तु तत्तदिच्छाव्यक्तीनामभावसमुदाय इत्याशयेनैव यादृशेच्छेत्युक्तमिति ध्येयं इच्छाभावसमुदायस्येति इदमुपलक्षणं सिद्धिधर्मिकयद्यदप्रामाण्य
ज्ञानसत्त्वे सिद्धिदशायामनुमितिस्तत्तदप्रामाण्यज्ञानाभावसमुदायस्यापि सिद्धौ विशेषणत्वं बोध्यमत एव मिश्रैरनुमितिग्रन्थेऽप्रामाण्यज्ञानास्कंदितायाः सिद्धेः प्रति
बंधकत्वमुक्तं नसतिरिति यद्यप्येवमपि तत्तदिच्छाविरहव्यक्तीनां विशेष्यविशेषणभावे विनिगमनाविरहेणानंतकार्यकारणभावः न चैकेच्छाविरहविशिष्टेऽपरे

च्छाविरहस्तद्विशिष्टसिद्धित्वेनप्रतिबंधकत्वेसामानाधिकरण्यात्मकवैशिष्ट्यस्यद्विधाप्रवेशेगौरवमतस्तावतीनामिच्छाविरहव्यक्तीनामेकत्रद्वयमितिरीत्यायुगपदेवसि
द्धिविशेषणत्वंलाघवादितिवाच्यं सिद्धौतावदिच्छाविरहवैशिष्ट्येपिसिद्ध्यंशेप्रत्येकंतत्तदभावसामानाधिकरण्यस्यवैशिष्ट्यविधयाप्रवेशात्सिद्धौतावदभाववैशिष्ट्य
स्यैवतत्तदेकाभावेऽपराभाववैशिष्ट्यप्रवेशेगौरवोनवकाशाच्च। तथापिसिद्धौतत्तदभावानांयुगपद्विशेषणत्वेवैशिष्ट्यरूपसामानाधिकरण्यवृत्तित्वांशस्यसकृदेवप्रवेशाल्ला
घवप्रत्येकोभावेऽभावान्तरवैशिष्ट्यस्यसंबंधत्वेतुवैशिष्ट्यघटकवृत्तित्वस्यबहुशःप्रवेशेगौरवमतोयुगपदेवतावतीनामभावव्यक्तीनांसिद्धिविशेषणत्वंयुक्तम् किंचसिद्धौ
तावदभावस्ययुगपद्विशेषणत्वे विशेषणतासंबंधावच्छिन्नाधिकरणसमवेतत्वमेवानुगतस्संबंधनवत्वेकाभावेऽपराभाववैशिष्ट्यविशेषणताविशेषावच्छिन्नाधिक
रणेविशेषणतयावृत्तित्वंसिद्धावभावान्तवैशिष्ट्यंतुविशेषणताविशेषावच्छिन्नाधिकरणेसमवेतत्वमित्यनुगतवैशिष्ट्यासंभवात् एवनेकाभावविशिष्टापराभावविशिष्ट
सिद्धित्वेनप्रतिबंधकत्वं किन्तुतावदभावविशिष्टसिद्धित्वेनैवेतिदिक्। स्वतंत्रास्तु तत्तदिच्छाविरहकूटविशिष्टसिद्धित्वावच्छिन्नाभावस्याखंडस्यतत्तद्व्यक्तित्वेनवहे
तुत्वंतत्तद्व्यक्तित्वंचतादात्म्यनसैवव्यक्तिरित्यदोषः चिन्तामणिकृन्मतेविशिष्टाभावस्यातिरिक्तत्वात् नचकारणतामात्रस्यधर्मावच्छेद्यत्वमानाभावादेवावच्छेद
कविनैवतादृशसिद्ध्यभावस्यानुमितिकारणत्वमितिप्रलापोग्राह्यः व्यापकतागर्भायाः कारणताया अवच्छेदकस्यनानाव्यक्तिस्थलइवैकव्यक्तिस्थलेपिसंभवेनवार
यितुमशक्यत्वात् पदार्थान्तररूपायास्तुकारणताया अवच्छेदकस्यनानाधिकरणेष्वपिपरित्यागप्रसंगादित्याहुस्तच्चिन्त्यम्। केचित्तु पक्षधर्मिकसाध्यविधेयकानुमि
तित्वप्रकारिकेच्छात्वेनैवानुगतरूपेणोत्तेजकतालाघवात् इच्छातस्थलेचतादृशेच्छोत्पत्तौवानुमितिस्तथैवकारणीभूतस्यविशिष्टाभावस्यसम्पत्तेरितिप्राहुः। आलो
कपरामर्शादिति। आलोकमात्रपरामर्शादित्यर्थः तदन्येति धूमेनालोकेनचपर्वतेवन्ह्यनुमितिर्जायतामितीच्छायामपिधूमलिंगकानुमित्यर्थमात्रपदं। तथाचधूमलिंग
कानुमित्साविरहविशिष्टेवालोकलिंगकानुमित्साधूमलिंगकानुमितौप्रतिबंधकेत्यर्थः अत्रयद्यपिधूमलिंगकानुमितित्वप्रकारिकेच्छात्वेनैवोत्तेजकत्वेधूमेनद्रव्यत्व
स्यालोकेनचवन्हेः पर्वतेनुमितिर्जायतामितीच्छायामपिवन्हिव्याप्यधूममात्रपरामर्शाद्धूमलिंगकानुमित्यापत्तेः धूमलिंगकवन्ह्यनुमितित्वप्रकारीच्छात्वेन तथात्वेतुधू
मेनमहानसादावलोकेनचपर्वतेवन्ह्यनुमितिर्जायतामितीच्छायामपिधूममात्रपरामर्शात्पर्वतेवन्ह्यनुमित्यापत्तेःनचपर्वतपक्षकधूमलिंगकवन्ह्यनुमितौतादृशानुमिति
त्वप्रकारिकेच्छाविरहविशिष्टालोकलिंगकेच्छात्वेनैवप्रतिबंधकत्वंधूमेनालोकेनचानुमितिर्जायतामितीच्छायामपिधूममात्रस्यपरामर्शाद्धूमलिंगकानुमित्यभावापत्ते
स्तदिच्छायाःपर्वतपक्षकवन्ह्यनुमितित्वप्रकारकत्वाभावात् तथापियद्यदिच्छाव्यक्तिदशायामालोकलिंगकानुमितीच्छाव्यक्तिसत्वेपिपर्वतधर्मिकधूमलिंगकवन्ह्य

नुमितिप्रामाणिकीतत्तदिच्छाविरहकूटविशिष्टालोकलिंगकानुमितित्वप्रकारिकेच्छात्वेनैवतादृशधूमलिंगकानुमितिप्रतिबंधकत्वंवाच्यमतएवालोकलिंगकासत्तीयाधूमलिंगका
पर्वतेवन्ह्यनुमितिःसाजायतामितीच्छासत्त्वेपर्वतधर्मिकधूममात्रपरामर्शान्नवन्ह्यनुमितिस्तत्तदिच्छाव्यक्तेरुत्तेजकानंतर्गतत्वात् नचयत्रधूममात्रपरामर्शोत्तरंधूमालोकोभयलिंगका
नुमितिर्जायतामितीच्छातत्तस्तदुभयलिंगकपरामर्शोत्पत्त्यानुमितिस्तत्रतदुभयलिंगकपरामर्शोत्पत्तिक्षणेधूमलिंगकानुमितिस्स्यादग्रिमानुमित्यनुरोधेनतदिच्छाव्यक्तेरुत्तेजकत्वादिति
वाच्यंतत्रसमूहालंबनपरामर्शव्यक्तिविशिष्टतत्तदिच्छाव्यक्तित्वेनैवोत्तेजककोटौनिवेश्यत्वात् इत्थंचालोकेनमहानसेवन्ह्यनुमितिर्जायतामितीच्छासत्त्वेपिधूमपरामर्शात्पर्वतेवन्ह्यनुमितिः
रप्रत्यूहैवतदिच्छाव्यक्तेरपिस्वस्मिन्नुत्तेजकत्वात् अतएवालोकेनवन्ह्यनुमितिर्जायतामितीच्छोत्तरंधूमालोकयोःसमूहालंबनपरामर्शात्पर्वतेवन्ह्यनुमितिर्नस्यात्तस्या
पिधूमपरामर्शाव्यवहितोत्तरत्वेनधूमलिंगकानुमितित्वात्तादृशानुमितिविरोध्यालोकलिंगकानुमित्सायास्सत्वादितिपरास्तम् तदिच्छाव्यक्तेरप्युत्तेजकत्वात्तत्रधू
मलिङ्गकत्वप्रकारिकेच्छात्वेनोत्तेजकत्वासंभवस्यानुपदमुक्तत्वात् यत्तुपर्वतधर्मिकवन्ह्यनुमितिसामान्यंप्रत्यालोकादिलिंगकपरामर्शाभावविशिष्टालोकादि
मात्रलिंगकानुमित्सात्वेनप्रतिबंधकत्वंवाच्यंनतुधूमादितत्तल्लिंगकानुमितित्वावच्छिन्नंप्रतितदन्यलिंगकानुमित्सात्वेनप्रतिबंधकत्वंकार्यतावच्छेदकगौरवापत्तेः
तथाचोक्तस्थलेआलोकलिंगकपरामर्शसत्त्वेनतल्लिंगकानुमित्सानानुमितिप्रतिबंधिकानचमात्रपदवैयर्थ्यंधूमपरामर्शोत्तरमालोकेनधूमेनवावन्ह्यनुमितिर्जायता
मितीच्छादशायामनुमित्यर्थंतदुपादानादितिचेन्नधूमपरामर्शदशायामालोकेनभस्मनाचवन्ह्यनुमितिर्जायतामिच्छासत्त्वेप्यनुमितिप्रसंगात् आलोकपरामर्शाभाव
विशिष्टायाअपितादृशेच्छायाआलोकलिंगकत्वमात्राप्रकारकत्वात्।नचालोकलिंगकपरामर्शाभावविशिष्टेनधूमलिंगकत्वाप्रकारकालोकलिंगकानुमित्सात्वेनपर्वत
धर्मिकवन्ह्यनुमितिसामान्यप्रतिविरोधित्वान्नैषदोषइतिवाच्यंभस्मलिंगकपरामर्शोत्तरमप्यालोकेनधूमेनचवन्ह्यनुमितिर्जायतामितीच्छासत्त्वेवन्ह्यनुमितिप्रसं
गात्तादृशेच्छायाधूमलिंगकत्वप्रकारकत्वेनाविरोधित्वात्तस्मात्तल्लिंगकानुमितित्वावच्छिन्नंप्रतिप्रागुक्तक्रमेणतत्तदन्यमात्रलिंगकानुमित्सात्वेनप्रतिबंधकत्वमेवस
म्यगितिदिक्।यदिचतत्रेति।अन्यसाध्यकानुमित्सायाइवान्यलिंगकानुमित्सायाअपिस्वतःप्रतिबंधकत्वेमानाभावादितिभावः तत्रेति सिद्ध्यात्मकालोकपरामर्शो
त्तरंधूमेनानुमिनुयामीती च्छादशायामनुमितिवारणायेत्यर्थः नचतत्तदनुमित्साव्यक्तीनामुत्तेजककोटौप्रवेशादेवनतत्रानुमितिरितिवाच्यंयत्रसिद्ध्यात्मकालोक
परामर्शोत्तरंधूमलिंगकानुमित्साततःक्रमेणसिद्ध्यात्मकधूमपरामर्शाद्वन्ह्यनुमितिस्तत्रधूमपरामर्शोत्पत्तिक्षणेवन्ह्यनुमित्यापत्तेःपर्वतपक्षकवन्ह्यनुमितौतदिच्छा
व्यक्तेरप्युत्तेजकत्वात् अन्यथातत्रैवसिद्ध्यात्मकधूमपरामर्शाद्वन्ह्यनुमितिर्नस्यादितिभावः।यद्यपिवक्ष्यमाणस्वविषयसिद्ध्यनुपहितत्वविशेषणेनैवधूमादिलिं

जा॰प॰ गकतत्तत्परामर्शविशिष्टायातत्तदिच्छाव्यक्तेरुत्तेजकतायांन कोपिदोषः प्रागुक्तस्थले धूमपरामर्शविशिष्टानुमित्साव्यक्तिविरहसहकृतसिद्धिसत्वादेवधूमपरामर्शोत्प
७ त्तिदशायामपिअनुमित्सापत्तेरसंभवात् तथापिमिश्रादिसंमतमेकावच्छेदेनपक्षतापरामर्शाभियजन्यत्वमनुमितेस्संपादयितुमनुमित्सामेवान्यथानिर्वक्तितल्लिंगका
नुमित्सेतिवाच्येतिपरेणान्वयः ननुतल्लिंगकानुमितित्वप्रकारिकेच्छाव्यक्तीनामुत्तेजकत्वेवन्ह्यनुमितिर्जायतामितीच्छायांसिद्ध्यात्मकालोकपरामर्शादालोकलिं
गकानुमितिर्नस्यात्तदिच्छाव्यक्तेरालोकलिंगकत्वाप्रकारकत्वात्तत आह तदन्यमात्रेतिधूमालोकाभ्यांवन्ह्यनुमितिर्जायतामितीच्छादशायांसिद्ध्यात्मकालोकपरामर्शाद
नुमित्यर्थं मात्रपदं तथाच तल्लिंगकानुमितित्वाप्रकारकत्वेसतियायत्किंचिल्लिंगकानुमितित्वप्रकारिकेच्छातदतिरिक्तानुमित्सासिषाधयिषापदेनवाच्येत्यर्थः तेन
प्रमेयलिंगकानुमितिस्थलेतदन्यलिंगाप्रसिद्धावपिनक्षतिः अत्रतदन्यमात्रलिङ्गकानुमित्सातिरिक्तंनविशेषणंकिंतूत्तेजकीभूततत्तदिच्छाव्यक्तीनोपरिचायकमितिम
न्तव्यम् ननुतल्लिंगकानुमित्साविरहविशिष्टसिद्धिसत्वेप्यन्यलिंगकानुमित्सान्यलिंगकपरामर्शोत्तरंप्रकृतपक्षसाध्यानुमितेरुत्पादेनव्यभिचारात्कुतःपक्षतायाअ
नुमितिहेतुत्वमित्यतआह। लिंगेतिलिंगविशेषनियंत्रितलिंगविशेषावच्छिन्नकार्यताकम् तथाच यद्यदनुमित्साव्यक्तिसत्वेसिद्धिदशायांतल्लिंगकतत्पक्षकतत्साध्य
कानुमितिर्जायतेतत्तदिच्छाव्यक्तिविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकतत्साध्यकानुमितित्वावच्छिन्नंप्रत्येवहेतुरतोनव्यभिचारइतिभावः अन्यलिंगकानुमित्साया
स्तल्लिंगकानुमितौस्वातंत्र्येणविरोधित्वेपक्षतायालिंगविशेषानियंत्रितत्वेपिनक्षतिरित्याह तल्लिंगकानुमिताविति सिद्ध्यभावदशायामन्यलिंगकेच्छासत्वेपितल्लिंग
कानुमित्युत्पत्तेराह सिद्धि कालीनेति सिद्धिविशिष्टेत्यर्थः तल्लिंगकानुमित्सासत्वेऽन्यलिंगकानुमित्सायास्तल्लिंगकानुमित्यप्रतिबंधकत्वादाह तल्लिंगकानुमितीच्छावि
शेषविरहकूटविशिष्टेति तल्लिंगकानुमितित्वंतल्लिंगकपरामर्शाव्यवहितोत्तरानुमितित्वं तथाचालोकलिंगकानुमित्सादशायांधूमालोकयोसिद्ध्यात्मकपरामर्शोत्तरंपर्वते
वन्ह्यनुमितिर्नस्यात्तस्यापिनिरुक्तधूमलिंगकत्वेनालोकलिंगकानुमित्साप्रतिबध्यत्वादतोविशेषपदम् तेनवस्तुगत्यातल्लिंगकानुमितिगोचरयद्यदिच्छाव्यक्तिसत्वेन्य
लिंगकानुमित्साकालेतल्लिंगकानुमितिर्जायतेतत्तदिच्छाविरहकूटविशिष्टान्यलिंगकानुमित्सात्वेनैवतल्लिंगकानुमितौप्रतिबंधकत्वमुक्तस्थलेचालोकलिंगकानुमि
त्साव्यक्तेरपिवस्तुगत्याधूमलिंगकानुमितित्वगोचरतयातदिच्छाव्यक्तेरुत्तेजककोटौनिविष्टत्वान्नदोषः विशेषपदासत्वपक्षेपितल्लिंगकानुमित्साविरहविशिष्टत्वस्यो
क्तस्वार्थोग्राह्यः अत्रापिवैशिष्ट्यमेकसमयावच्छेदेनैकात्मवृत्तित्वम् तेनपुरुषान्तरीयतल्लिंगकानुमितीच्छामादायान्यलिंगकानुमित्सादशायांनानुमितेरुत्पादः राम॰
नचतल्लिंगकानुमित्साभिन्नतदन्यलिंगकानुमित्सैवप्रतिबंधिकास्तुतल्लिंगकानुमित्साविरहविशिष्टत्वप्रवेशेगौरवादितिवाच्यं यत्रसिद्ध्यात्मकापेक्षाबुध्यात्मकधूमप ७

रामशर्मोक्तसंक्रमेणालोकलिंगकानुमितित्वप्रकारेण धूमलिंगकानुमितित्वप्रकारेणेच्छाहूयीतत्रचतुर्थक्षणे धूमे लिंगकानुमित्यनुत्पादापत्तेः धूमलिंगकानुमित्साभिन्नायाएवालोकलिंगकानुमित्सायाः सत्वादिति भावः अन्यलिंगकानुमित्सैववेतिवाकारो नस्यायाम् पूर्वकल्पोक्तस्य तल्लिंगकानुमित्साविरहविशिष्टसिद्ध्यभावत्वेनतल्लिंगकानुमितिहेतुत्वस्य लाघवेन तदपेक्षया तत्कल्पस्य गुरुत्वात्तत्पक्षसाध्यकानुमितौ सामान्यतः सिषाधयिषाविरहविशिष्टसिद्ध्यभावत्वेन कारणान्तरस्याप्यत्र कल्पे वक्तव्यत्वादन्यथा सिद्ध्यात्मकपरामर्शमात्रादनुमित्यापत्तेस्तादवस्थ्यादिति ध्येयं ननु साधमानं सिद्धिजनकं मानं तथा च परामर्शमात्रादप्यनुमितिर्नस्यात्तस्यैव तादृशसाधकमानत्वादतो व्याचष्टे साध्यवत्वनिश्चयइति साध्यवत्वसंशयेप्यनुमित्युत्पादान्निश्चयइत्युक्तम् यद्यपि साध्यवत्वनिश्चयत्वं यदि साध्यसामान्याभावाप्रकारकत्वे सति साध्यप्रकारकत्वं तदा पर्वतः कपिलवन्हिमान्नवेति संदेहदशायां पर्वतो वन्हिमानित्यानुमितिर्नस्यात्तादृशसंदेहस्यापि वन्हिसामान्याभावाप्रकारकत्वे सति वन्हिप्रकारकत्वात् नच येन रूपेण साध्यता तन्मात्रावच्छिन्नप्रकारकत्वं निश्चयत्वघटकमतः कपिलवन्हित्वावच्छिन्नप्रकारताकसंदेहस्य वन्हित्वमात्रावच्छिन्नप्रकारताकत्वाभावान्न दोष इति वाच्यं पर्वतः कपिलवन्हिमानिति निश्चयदशायामपि पर्वतो वन्हिमानित्यनुमित्यापत्तेस्तादृशनिश्चयस्य वन्हित्वमात्रावच्छिन्नप्रकारकत्वाभावात् नचेष्टापत्तिरनुभवविरोधात् अतएव गवाश्रितत्वे साध्ये सकलगवाश्रितत्वं न हेतुरविशिष्टसाध्यवत्वानुमितौ विशिष्टसाध्यवत्ताग्रहस्यापि विरोधितया पक्षधर्मताग्रहदशायां सिद्धसाधनादिति शक्तिवादे मिश्रैरप्युक्तं यदि च साध्यप्रतियोगिकाभावाप्रकारकत्वे सति साध्यप्रकारकत्वमेव साध्यनिश्चयत्वं तदारुणवन्हिशून्यः पर्वतो वन्हिमानित्येवं निश्चयेपि पर्वतो वन्हिमानित्यनुमित्यापत्तिः उक्तनिश्चयस्य वन्हिप्रतियोगिकाभावप्रकारकत्वेनाविरोधित्वात् तथापि वन्हित्वावच्छिन्नविधेयकानुमितिं प्रति वन्हिसामान्याभावाप्रकारकवन्हिमात्रावच्छिन्नप्रकारकत्वेन कपिलवन्ह्यभावाप्रकारककपिलवन्हित्वावच्छिन्नप्रकारकत्वादिना च प्रत्येकधर्मेणैव प्रतिबंधकत्वात् तत्तत्सिद्ध्यभावकूटस्यैव पक्षतात्वं विरोधिसाध्यनिश्चयानामनुगतैकधर्माभावात् यत्तत्तत्साध्यतावच्छेदकावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपितप्रकृतपक्षनिष्ठविशेष्यताज्ञानत्वमेव साध्यनिश्चयत्वं वाच्यं पर्वतः कपिलवन्हिमान्नवेत्यादिसंशये तु पर्वतनिष्ठविशेष्यत्वं वन्हित्वावच्छिन्नप्रकारत्वभिन्नत्वेन कपिलवन्ह्यभावत्वावच्छिन्नप्रकारकत्वेन निरूपितमतस्तद्व्युदासः संशयविशेष्यतामात्रस्यैव प्रकारताद्वयनिरूपितत्वादेवं च निर्वन्हिर्वन्हिमांश्च पर्वत इत्यादिसमुच्चयस्यापि साध्यनिश्चयत्वसंभवात्तत्सत्वेपि न वन्ह्यनुमितिः समुच्चयस्थले प्रकारताद्वयनिरूपितविशेष्यताद्वयोपागमात् भूतलं घटवत्पटवच्चेत्यादिस्थले भूतलस्य द्विधाभानवदत्रापि पर्वतस्य प्रकारताद्वयाश्रयो द्वैविध्येन भानादित्यन्यत्र विस्तरः तत्र पर्वते तस्य वन्हेः धर्मित्वेति

